तीक्ष्णपर्वस्रुशोभिना ३१ सविद्धोहृदिबाणेनपीडांप्राप्तःसुदारुणाम् पपातस्यंदनोपस्थेधनुःपाणिःसुशो
भितः ३२ शत्रुघ्नंमूर्छितंदृष्ट्वानृपाश्वसुरथादयः प्रजग्मुर्लवमुद्युक्ताजयप्राप्त्यैरणेतदा ३३ सुरथोविमलो
वीरोराजावीरमणिस्तथा सुमदोरिपुतापाद्याबभ्रमुश्चैवसंयुगे ३४ केचित्सुकरप्रैर्मुसलैःकेचिद्बाणैःसुदा
रुणैः प्रासैःपरशुभिःकेचित्सर्वतःप्राहरन्नृपाः ३५ तानधर्मेणसंयत्तान्दृष्ट्वावीरशिरोमणिः दशभिर्दशभि
र्बाणैस्ताडयामाससंयुगे ३६ तेबाणवर्षविहतारणमध्येसुकोपनाः केचित्पलायिताःकेचिन्मुमुहुर्युद्धमंड
ले ३७ तावत्सराजाशत्रुघ्नोमूर्छांसंत्यज्यसंगरे लवंप्रायान्महावीरंयोद्धुंबलसमन्वितः ३८ आगत्यतंल
वंप्राहधन्योसिशिशुसन्निभः नबालस्त्वंसुरःकश्चिच्छलितुंमांसमागतः ३९ केनापिनहिवीरेणपातितोरण
मंडले त्वयाहंगमितोमूर्छांसमक्षंममपश्यतः ४० इदानींपश्यमेवीर्यंत्वांसंख्येपातयाम्यहं सहस्रबाणमेकं
तंमापलायस्वबालक ४१ इत्युक्त्वासमरेबालंशरमेकंसमाददे यमवक्त्रसमंघोरंलवणोयेनघातितः ४२ संधा
यबाणंजाज्वल्यंहृदिभेत्तुंमनोदधत् लववीरसहस्राणांवह्निवत्संप्रदाहकम् ४३ तंबाणंप्रज्वलंतंसद्योतयंतं
दिशोदश दृष्ट्वासस्मारबलिनंकुशंवैरिनिपातिनम् ४४ यद्यस्मिन्समयेवीरोभ्रातास्याद्बलवान्मम तदाश
त्रुघ्नतोनस्याद्भयंममतदुल्बणम् ४५ एवंतर्कयतस्तस्यलवस्यचमहात्मनः हृदिलग्नोमहाबाणोघोरःकालान
लप्रभः ४६ मूर्छांप्रापतदावीरोभूपसायकसंहतः संगरेसर्ववीराणांशिरोभिःसमलंकृते ४७ इतिश्री

पद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेशत्रुघ्नमूर्छानामद्विषष्टितमोऽध्यायः ६२ शेष
उवाच लवंविमूर्छितंदृष्ट्वाबलिवैरिविदारणम् शत्रुघ्नोजयमापेदेरणमूर्ध्निमहाबलः १ लवंबालंरथे
स्थाप्यशिरस्त्राणाद्यलंकृतम् रामप्रतिनिधिंमूर्त्यातनोगंतुमियेषसः २ स्वमित्रंशत्रुणाग्रस्तमतिदुःखसम
न्विताः बालामात्रेस्यसीतायैत्वरिताःसन्यवेदयन् ३ बालाऊचुः मातर्जानकितेपुत्रोबलाद्ग्राहमपा
हरत् कस्यचिद्भूपवर्यस्यबलयुक्तस्यमानिनः ४ ततोयुद्धमभूत्घोरंतस्यसैन्येनजानकि तदावीरेणपुत्रे
णतवसर्वंनिपातितम् ५ पश्चादपिजयंप्राप्तःकृतस्तवमनोहरः तंभूपंमूर्छितंकृत्वाजयमापरणांगणे ६
ततोमूर्छांविहायैषराजापरमदारुणः संकुप्यपातयामासतवपुत्रंरणांगणे ७ अस्माभिर्वारितःपूर्वमागृहा
णहयोत्तमम् अस्मान्सर्वांश्चधिःकृत्यब्राह्मणान्वेदपारगान् ८ इतिवाक्यंशिशूनांसासमाकर्ण्यसुदारुणाम्
पपातभूतलोपस्थेदुःखयुक्तारुरोदह ९ सीतोवाच कथंनृपोदयाहीनोबालेनसहयुध्यति अधर्मं
कृत्वादुर्बुद्धिर्योमबालंन्यपातयत् १० लववीरभवान्कुत्रवर्ततेतिबलान्वितः कथंत्वंनिष्कृपस्याहोराज्ञोहार्षी
द्धयोत्तमम् ११ त्वंबालस्तेदुराक्रांताःसर्वशास्त्रविशारदः रथस्थाविरथस्त्वंवैकथंयुद्धंसमंभवेत् १२ नातना-
हंत्वयासार्धंरामत्यागात्सुखंजहौ इदानींरहितायुष्मन्कथंजीवामिकानने १३ एहिमांसुचयज्ञाश्वंगच्छत्वेष
महीपतिः मद्दुःखंनाभिजानासिममदुःखप्रमार्जकः १४ कुशोयद्यभविष्यत्सरणेवीरशिरोमणिः प्रमोचयिष्य

दध्युनाभवदंतंभूपपार्श्वतः १५ नास्तिमद्दैवयोगेनसमीपेकिंकरोम्यतः दैवमेवमभाप्यत्र कारणंदुःखसंभवे १६ एवमादिबहुश्रीमत्येषावैविललापह पादांगुष्ठेनालिखंतीभूमौनेत्रजलाप्लुता १७ बालान्प्रतिजगादासौपृथुकाःसचभूपतिः कथंमत्कृतमापात्यरणेकुत्रगमिष्यति १८ इतिवाक्यंवदत्येषाजानकीपतिदेवता तावत्कुशस्तुसंप्राप्तउज्जयिन्यामहर्षिभिः १९ माघासितचतुर्दश्यांमहाकालंसमर्च्यच प्राप्यभूरिवरांस्तस्मादागमन्मातृसंनिधौ २० जानकींविह्वलांदृष्ट्वानेत्रोद्भूतास्रविक्लवाम् शोकविह्वलदीनांगींबभाषेयावदुत्सुकः २१ नदानद्वाहुरवदत्स्फुरन्युद्धाभिशंसनः हृदयेचरणोत्साहोबभूवातिरथस्यहि २२ सप्रत्यवाचस्तु खिन्नांदीनगद्गदभाषिणीम् कुशोदुःखमितःसद्योदुःखितांधीरमानसः २३ मातस्तवकथंदुःखंमयिपुत्रउपस्थिते मयिजीवतितेनेत्रादश्रूणिप्रविनोपतन् २४ ममभ्रातालवःकुत्र वर्त्ततेवैरिमर्दनः नतदामागतंज्ञात्वाप्रहर्षन्सन्निधावियात् २५ नदृश्यतेकथंवीरःकुत्ररंतुंगतोबली केनवासहबालत्वाद्गतोमांवैनिरीक्षितुम् २६ किंनुरोदसिमेमातर्लवःकुत्रसवर्त्तते तन्मेकथयसर्वंतत्त्वदुःखस्यकारणम् २७ तच्छुत्वापुत्रवाक्यंसादुःखिताकुशमब्रवीत् लवोधृतोनृपेणात्रकेनचिद्धयरक्षिणा २८ बबंधबालकोमेत्रहयंयागक्रियोचितम् तद्रक्षकान्बहून्जिग्येएकएवरिपून्बली २९ राजानंमूर्छितंकृत्वाबबंधरणमूर्धनि बालकाइतिमासूचुःसहगंतारएवहि ३० ततोहंदुःखिताजातानिशम्यलवमाधृतं तंमोचयबलात्तस्मात्कालेप्राप्तोनृपोत्तमात् ३१ निशम्यमातुर्वचनंकुशःकोप

समन्वितः जगादतांदशन्नोष्ठंदंतैर्दंता न्विनिष्पिषन् ३२ कुशउवाच मातर्जानीहितंमुक्तंलवंपाशस्यबं
धनात् इदानींहन्मितंबाणैःसमग्रबलवाहनम् ३३ यदिदेवोमरोवापियदिशर्वःसमागतः तथापिमोचयेत्तस्माद्बाणे
र्निशितपर्वभिः ३४ मारोदिषीर्मातरिहवीराणांरणमूर्छितम् कीर्तयेत्रभवत्येवपलायनमकीर्तये ३५ देहिमेकवचंदि
व्यंधनुर्गुणसमन्वितम् शिरस्त्राणंचमेमातः करवालंतथासितम् ३६ इदानींयामिसमरेपातयामिबलंमहत्
मोचयामिभ्रातरंस्वंरणमध्याद्विमूर्छितम् ३७ नमोचयाम्यद्यपुत्रंतवमातर्महारणात् तदातौमेभवत्पादौसंस्पृष्टौभव
तांक्षितौ ३८ शेषउवाच इतिवाक्येनसंतुष्टाजानकीशुभलक्षणा सर्वंप्रादादस्त्रवृंदंजयाशीर्भिर्नियुज्य
तम् ३९ प्रयाहिपुत्रसंग्रामंलवंमोचयमूर्छितम् ४० इत्याज्ञप्तः कुशःसंख्येकवचीकुंडलीबली मुकुटीकरवाली
चचर्मधारीधनुर्धरः अक्षयाविषुधीकृत्वास्कंधयोःसिंहवीर्ययोः जगामतरसानत्वामातृपादौरथाग्रणीः ४२ वेगेन
यावद्युद्धायगच्छन्निक्षिप्रमाहवे तावद्ददर्शसलवंवैरिवृंदनिपातकम् ४३ आयांतंतंकुशंवीराददृशुःसुमहाभटाः कृ
तांतमिवसंहर्तुंसर्वंविश्वमुपस्थितम् ४४ लवोमहाबलंदृष्ट्वाकुशंभ्रातरमागतम् अत्यंतंवह्निवद्युद्धेदिदीपेवायु
नासमम् ४५ रथादुन्मुच्य आत्मानंयुद्धायसविनिर्गतः कुशःसर्वान्रणस्थान्वैवीरान्पूर्वदिशिक्षिपत् पश्चिम-
स्यांदिशिलवः कोपात्सर्वान्समीरयत् ४६ कुशबाणव्यथाव्याप्तालवसायकपीडिताः सैन्येजनासुनेसर्वेउत्क
ल्लोलांबुधिभ्रमाः ३७ कुशेनचलवेनाथशरव्रातैःप्रपीडितम् नशर्मलेभेसकलंसैन्यंवीरमपूरितम् ४८ इतस्ततः

प्रभग्नं तद्बलं त्वस्तं पुनः पुनः नकुत्रचिद्रणे स्थित्वा युद्धमैच्छद्बलान्वितम् ४९ एतस्मिन्समये राजा शत्रुघ्नः परताप
नः कुशं वीरं ययौ योद्धुं ददर्श लवसन्निभम् ५० कुशं दृष्ट्वा बलाक्रांतरामसूर्तिसमप्रभम् रथे तिष्ठन्हेममये जगा
द परवीरहा ५१ शत्रुघ्न उवाच कोसि त्वं सन्निभोस्मात्बालवेन स्मम हाबलः किं नामासि महावीर कस्ते
तातश्च का प्रसूः ५२ कथं वने हि द्विजैर्जुष्टे तिष्ठसि त्वं नरर्षभः सर्वं शंस यथा युद्धं त्वया सह महाबल ५३ इति वाक्यं स
माकर्ण्य कुशः प्रोवाच भूमिपम् मेघगंभीरया वाचा नादयन्रणमंडलम् ५४ केवलं स्मः सुवे सीता पतिव्रतपरायणा
वने वसावो वाल्मीकेश्चरणार्चनतत्परौ ५५ मातृसेवासमुद्युक्तौ सर्वविद्याविशारदौ कुशो लव इति प्रख्यामागतौ
भूपते नघ ५६ कस्त्वं वीरवरश्लाधिन् किमर्थं हयसत्तमः मुक्तोसि समरे त्वद्य जेतासि बलसंयुतः ५७ युध्यस्व त्वं म
या सार्धं यदि वीरोसि भूमिप इदानीं पातयिष्यामि भवंतं रणमूर्धनि ५८ शत्रुघ्नस्तं स्मतं ज्ञात्वा सीताया रामसंभ
वम् विसिस्मायस्वयं चित्ते कोपाद्धनुरुपाददे ५९ तमात्तधनुषं दृष्ट्वा कुशः कोपसमन्वितः विस्फारयामास धनुः स्वी
यं स्मृढदसुत्तमम् ६० मुमोच बाणान्निशितान् शत्रुघ्नः सर्वशास्त्रवित् तांश्चिच्छेद कुशः सर्वान्लीलया प्रहसन्रणे ६१
बाणांश्च शतसाहस्राः कुशस्य च नृपस्य च भुवनं व्याप्नुवत्सर्वं तच्चित्रमभवन्मुने ६२ अग्न्यास्त्रेण कुशः सर्वान्ददा
ह तरसा बली शमयामास तं भूपः पर्जन्यास्त्रेण वीर्यवान् ६३ शमयामास तं वह्निं वायव्येनातिविक्रमः पर्वतास्त्रेण
तं वायुं क्षोभयंतं समावृणोत् वज्रास्त्रेण नृपः संख्ये चिच्छेद सनगोपलान् ६४ तदा नारायणास्त्रं स मुमोच कुश उद्भ

टः नारायणंतदाभूपंनाशकोसरिबाधितुम् ६५ तदाप्रकुपितोनित्यंकुशःकोपपरायणः उवाचभूपंशत्रुघ्नंमहा
बलपराक्रमम् ६६ जानामित्वांमहावीरंसंग्रामेजयकारिणम् यस्त्वंनारायणास्त्रंमेनबबाधेभयानकम् ६७ इ
दानींपातयाम्यद्यभूमौत्वांनृपतेशरैः त्रिभिश्चेन्नकरोम्येतत्प्रतिज्ञांतर्हिमेशृणु ६८ योमनुष्यवपुःप्राप्य दुर्ल
भंपुण्यकोटिभिः तन्नाद्रियेतसंमोहात्तस्यमेस्त्वत्रपातकम् ६९ सावधानोभवानत्रभवतुप्रधनांगणे पातया
मिक्षितौसद्यइत्युक्त्वास्वशरासने ७० शरंसंरोपयामासघोरंकालानलप्रभम् लक्ष्मी कृत्यरिपोर्वक्षोविपुलंक-
ठिनंमहत् ७१ तंसंधितंशरंदृष्ट्वाशत्रुघ्नःकोपमूर्छितः मुमोचबाणान्निशितान्कुशत्वग्भेदकारकान् ७२ स-
बाणोहृदयंतस्यभेत्तुंतत्रचचालवै घोररूपोवह्निसमआशीविषवदुच्छ्वसन् ७३ सबाणोनृपवर्येणारामंस्मृत्वा
धनुष्मता संछिन्नःकुशनिर्मुक्तःसायकःसितपर्वकः ७४ तदात्यंतंप्रकुपितःकुशोबाणस्यकृंतनात् अपरंसा
यकंचापेदधारशितपर्वकम् ७५ सयावत्तुदुरौभेत्तुंप्रियातिचबलोद्धतः तंतावदच्छिनत्तस्यशरंकालानलप्रभ
म् ७६ तदाकुशोमातृपादौस्मृत्वारोषसमन्वितः तृतीयंसायकंस्वीयेदधारपरमाद्भुतम् ७७ शत्रुघ्नस्तम
पिक्षिप्तंछेत्तुंबाणंसमाददे तावद्धृद्दःशरेणासौपपातधरणीतले ७८ हाहाकारोमहानासीच्छत्रुघ्नेविनिपाति
ते जयमापकुशस्तत्रस्वबाहुबलदर्पितः ७९ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्व
मेधेत्रिषष्टितमोऽध्यायः ६३ शेषउवाच शत्रुघ्नंपतितंवीक्ष्यसरथःप्रवरोनृपः प्रययौमणिनास्पृष्टे

रथेतिष्ठन्महाद्युते १ पुष्कलस्तूरणेपूर्वंपातितःसविचारयन् लवंयथैनदायोद्धुंमहावीरबलोन्नतम् २ स्ररथःकु
शमासाद्यबाणात्मुंचन्ननेकधा व्यथयामाससमरेमहावीरशिरोमणिः ३ स्ररथंविरथंचक्रेबाणैर्दशभिरुछि
खैः धनुश्चिच्छेदतरसासुदृढंगुणपूरितम् ४ अस्त्रप्रत्यस्त्रसंहारैःक्षेपणैःप्रतिक्षेपणैः अभवत्तुमुलंयुद्धंवीराणां
रोमहर्षणम् ५ अत्यंतंसमरोद्युक्तेस्ररथेदुर्जयेनृपे कुशःसंचिंतयामासकिंकर्तव्यंरणेमया ६ विचार्यनिशितं
घोरंसायकंससुपाददे हननायनृपस्यास्यमहाबलसमन्वितः ७ तमागतंशरंदृष्ट्वाकालानलसमप्रभम् छेत्तुं
मतिंचकाराशुनावद्भुम्नोरणेशरः ८ मूमूर्छसमरेवीरोमहावीरबलस्ततः पपातस्यंदनोपस्थेसारथिस्तमुपा
हरत् ९ स्रर थंपतितंदृष्ट्वाकुशंजयसमन्वितम् त्रासयंतंवीरगणाग्निनायपवनात्मजः १० समीरसूनुंप्रबल
मायातंवीक्ष्यवानरं जहासदर्शयन्दंतान्कोपयन्निवतंक्रुधा ११ उवाचचहनूमंतंमेहितंममसंमुखम् भेत्स्येबा
णसहस्रेणमृतोयाम्यांप्रयास्यसि १२ इत्युक्तोहनमानज्ञात्वारामसूनुंमहाबलं स्वामिकार्यप्रकर्तव्यमितिकृत्वा
न्वधावत १३ शालमुत्पाट्यतरसाविशालंशतशाखिनम् कुशंप्रतिसमादाययथौयोद्धुंमहाबलः १४ शालह
स्तंसमायांतंहनूमंतंमहाबलम् त्रिभिःक्षुरप्रैर्विव्याधहृदिचंद्रोपमैर्बली १५ सबाणविद्धस्तरसाकुशेनबलशा
लिना शालेनहृदिसंजघ्नेदंतान्निष्पिष्यमारुतिः १६ शालाहतस्तदाबालःकिंचिन्नाकंपतस्मयात् तदावीराःप्र
शंसांतुप्रचक्रुस्तस्यबाल्यतः १७ सशालेनहतोवीरःसंहारास्त्रंसमाददे संहर्तुंवैरिणंकोपात्कुशःसपरमास्त्रवि

त् १८ संहारास्त्रंसमादायदुर्जयंकुशमोचितम् दध्यौरामंस्वमनसाभक्तविघ्नविनाशकम् १९ तदामुक्तंकुशेनाशु
तदस्त्रंहृदिमारुतेः लग्नंमहाव्यथाकारितेनमूर्छामितःपुनः २० मूर्छांप्रासंतुतंदृष्ट्वाप्लवंगंबलसंयुतः विव्याध
सायकैस्तीक्ष्णैःसैन्यंतत्सकलंमहत् २१ तस्यबाणायुतैर्भग्नंबलंसर्वंरणांगणे पलायनपरंजातंचतुरंगबलं
महत् २२ तदाकपिपतिःकोपात्सुग्रीवोरक्षकोमहान् अभ्यधावन्नगानेकानुत्पाट्यकुशमुद्भटम् २३ कुशःस
र्वान्प्रचिच्छेदलीलयाप्रहसन्नगान् पुनरप्यगतान्वृक्षांश्चिच्छेदतरसाबली २४ अनेकबाणव्यथितःसुग्री-
वःसमरांगणे जग्राहपर्वतंघोरंकुशमभ्यपतद्द्रुतम् २५ कुशस्तंनगमायांतंवीक्ष्यबाणैरनेकधा पिपेषचच
काराशुमहारुद्रांगयोग्यताम् २६ सुग्रीवस्तन्महत्कर्मदृष्ट्वाबालेननिर्मितम् जयाशांप्रतिनिर्वृत्तोबभूवसमरांग
णे २७ रणमध्येदुराक्रांतंकुशंलांगुलताडकम् अत्यमर्षीरुषाक्रांतस्तंहंतुंनगमाददे २८ आत्मानंहंतुमुद्यु
क्तंवीक्ष्यसुग्रीवमादरात् ताडयामासबहुभिःसायकैःसितपर्वभिः २९ सताडितोबहुविधैःशरैःपीडासमन्वितः
कुशंहंतुंसमारब्धोययौशालंसमाददन् ३० तदातिकुपितोवीरोवारुणास्त्रंसमाददे बबंधतंचपाशेनदृढेनस
लवाग्रजः ३१ सबद्धःपाशकैःस्निग्धैःकुशेनबलशालिना पपातरणमध्येवैमहावीरैरलंकृते ३२ सुग्रीवंपति
तंदृष्ट्वावीराःसर्वत्रदुद्रुवुः जयमापलवभ्रातामहावीरशिरोमणिः ३३ तावल्लवोभटान्जित्वापुष्कलंचांगदंत
था प्रतापाग्र्यंवीरमणिंतथान्यानपिभूभुजः ३४ जयंप्राप्यरणेवीरोलवोभ्रातरमागमत् संग्रामेजयकर्तारं

वैरिकोटिनिपातकम् ३५ परस्परंप्रहर्षितौपरिरंभंप्रकुर्वतौ जयंप्रासौतदावार्त्तांमुनेचक्रतुरुन्मदौ ३६ ल
वउवाच भ्रातस्तवप्रसादेननिस्तीर्णोरणतोयधिः इदानींवीरसुरणंशोधयावःसुशोभितम् ३७ इत्यु
क्त्वा त्वरितंवीरौजग्मतुस्तौकुशीलवौ राज्ञोमौलिमणिंचित्रंजग्राहकनकाचितम् ३८ पुष्कलस्यलवोवीरोजग्रा
हसुकुंडंशुभम् अंगदेचमहानर्घ्येशत्रुघ्नस्यापरस्यच ३९ गृहीत्वाशस्त्रसंघातंहनूमंतंकपीश्वरम् सुग्रीवंसवि
धेगत्वाउभावपिबबंधतुः ४० पुच्छंवायुसुतस्यायंगृहीत्वातुकुशानुजः भ्रातरंप्रत्युवाचेदंनेष्यामिस्वीयमंदिरम्
४१ आवयोर्जननीप्रीत्यैगृहीत्वापुच्छकेत्वहम् क्रीडार्थंमुनिपुत्राणांकौतुकार्थंममैवच ४२ एतच्छ्रुत्वाततोवा
क्यमुवाचचकुशोलवम् अहमेनंगृहीष्यामिवानरंबलिनंदृढम् ४३ इत्येवंभाषमाणौतौबध्वातौबलिनांवरौ पु
च्छयोर्बलिनौधृत्वाजग्मतुःस्वाश्रमंप्रति ४४ स्वाश्रमायप्रगच्छंतौवीक्ष्यतौकपिसत्तमौ कंपमानौजगदतुरन्यो-
न्यंभीतयागिरा ४५ हनूमान्कपिराजानंप्रत्युवाचभयात्सुधीः एतौरामसुतावस्मान्नेष्यतःस्वाश्रमंप्रति ४६
मयापूर्वकृतंकर्मजानकींप्रतिगच्छता तत्रमेजानकीदेवीसंमुखाभून्मनोहरा ४७ सामांद्रक्ष्यतिवैदेहिबन्द्धंपाशे
नवैरिणा तदाहसिष्यतिवरात्रपामेप्रभविष्यति ४८ मयाकिमत्रकर्तव्यंप्राणत्यागोभविष्यति महद्दुःखंचपति
तंकथंशंमेभविष्यति ४९ सुग्रीवस्तद्वचःश्रुत्वाममाप्येवंमहाकपे नेष्यतेयदिमामेवंनिधनंतुभविष्यति ५०
एवंकथयतोरेव अन्योन्यंभयभीतयोः कुशोलवश्चभवनंमातुःप्रापतुरोजसा ५१ तावायातौसमीक्ष्यैवजहर्षजन

नीतयोः अन्योन्यंपरमप्रीत्यापरिरेभेनिजौरसौ ५२ ताभ्यांपुच्छगृहीतौतौवानरौवीक्ष्यजानकी हनूमंतंचसुग्री
वंसर्ववीरंकपीश्वरम् ५३ जहासपाशबद्धौतौवीक्ष्यमाणावरांगना उवाचचविमोक्षार्थंवदंतीवचनंवरम् ५४
पुत्रौप्रमुंचतांकीशौमहावीरौमहाबलौ ईक्षंतौमांयदिस्फीतौप्राणत्यागंकरिष्यतः ५५ अयंवैहनुमान्वीरोयो
ददाहदनोःपुरीम् अयमप्यृक्षराजोहिसर्ववानरयूथपः ५६ किमर्थंविधृतौकुत्रकिंवापकृतमादरात् पृच्छेयुवा
भ्यांविधृतौसमहान्विस्मयोस्तिमे ५७ इतिमातुर्वचःश्लक्ष्णंशृण्वंतौपुत्रकौतदा ऊचतुर्विनयश्रेष्ठौमहाबलस
मन्वितौ ५८ मातःकश्चनभूपालोरामोदाशरथिर्बली तेनमुक्तोहयःस्वर्णभालपत्रःसुशोभितः ५९ तत्रैतल्लि
खितंमातरेकवीराप्रसूर्मम येक्षत्रियास्तेगृण्हंतुनोचेत्पादतलार्चकाः ६० तदामयाविचारोवैकृतःस्वांतेपति
व्रते भवतीक्षत्रियाकिंनवीरसूःकिंनवाभवेत् धार्ष्ट्यंतद्वीक्ष्यभूपस्यगृहीतोश्वोमयाबलात् जितंकुशेनवीरेण
सैन्यंतत्तानितंरणे ६२ मुकुटोयंभूमिपतेर्जानीहिपतिदेवते अयमप्यन्यवीरस्यपुष्कलस्यमहात्मनः ६३ जा
नीहिमुकुटंत्वन्यंमणिमुक्ताविराजितम् अश्वोयंमेमनोहारीकामयानोस्यभूपतेः ६४ आरोहणायमद्भ्रातुर्जा
नीहिसुमनोहरः इमौकीशौमयारंतुमानितौबलिनांवरौ ६५ कौतुकार्थंनवैवैतौसंग्रामेयुद्धकारकौ इतिवाक्यं
समाकर्ण्यजानकीपतिदेवता ६६ जगादपुत्रौनौवीरौमोचयेतांपुनःपुनः सीतोवाच युवाभ्यांमन्
यःसृष्टोहनोरामहयोवरः ६७ अनेकेपातितावीराइमौबद्धौकपीश्वरौ पितुर्वांसुहयोवीरौयागार्थंमोचितो-

सुना ६८ तस्यापहृतवंतौकिंवाजिनंमखसत्तमम् मुंचतंप्लवगावेतौमुंचंतंवाजिनांवरम् ६९ क्षम्यतांभूपते
भ्राताशत्रुघ्नःपरकोपनः जनन्यास्तद्वचःश्रुत्वामुंचतुस्तौबलान्वितौ ७० क्षात्रधर्मेणतंभूपंजितवंतौबलान्वि
तम् नास्माकमनयोर्भाविक्षात्रधर्मेणयुध्यतां ७१ वाल्मीकिनापुराप्रोक्तमस्माकंपठतांपुरः दुःष्यंतेनसमंयु
द्धंभरतेनकृतंपुरा ७२ कण्वस्याश्रमकेवाहंधृत्वायागक्रियोचितम् तस्मात्कृतःस्वपित्राचयुद्धोत्भ्रात्रापिच्चा
नुजः ७३ गुरुणाचापिशिष्येणतस्मान्नोपापसंभवः त्वदाज्ञातोधुनाचावांदास्यावोहयमुत्तमम् ७४ मोक्ष्या
वःकीशावेतौनौकरिष्यावोवचस्तव इत्युक्त्वामातरंवीरौगतौसंग्राममूर्धनि ७५ अमुंचतांहयंचापिहयमेधक्रि
योचितम् सीतादेवीस्वपुत्राभ्यांश्रुत्वासैन्यंनिपातितम् ७६ श्रीरामंमनसाध्यात्वाभानुमेक्षतसाक्षिणम् य
द्यहंमनसावाचाकर्मणारघुनायकम् ७७ भजामिनान्यंमनसातर्हिजीवेदयंनृपः सैन्यंचापिमहत्सर्वंयन्नाशि
तमिदंबलात् ७८ पुत्राभ्यांतच्चजीवेत्तमसत्याज्जगतांपते इतियावद्वचोब्रूतेजानकीपतिदेवता ७९ तावद्बलंच
तत्सर्वमुत्थितंरणमूर्धनि ८० इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेचतुःषष्टि
तमोऽध्यायः ६४ शेषउवाच क्षणान्मूर्छांजहौवीरःशत्रुघ्नःसमरांगणे अन्येपिवीराबलिनोमूर्छां
प्राप्ताःसुजीविताः १ शत्रुघ्नोवाजिनांश्रेष्ठंददर्शपुरतःस्थितम् आत्मानंचशिरस्त्राणरहितंसैन्यजीवितम्
२ वीक्ष्यचित्रमिदंस्वांतेचकारचजगादह सुमतिंमंत्रिणांश्रेष्ठंमूर्छाविरहितंतदा ३ कृपांकृत्वाहयंप्रादाद्बालोय

ज्ञस्यपूर्तये गच्छामरामंतरसाहयागमनकांक्षिणम् ४ इत्युक्त्वासरथेस्थित्वाहयमादायवेगतः ययौतदाश्रमा
दूरंभेरीशंखविवर्जितः ५ तत्पृष्ठतोमहासैन्यंचतुरंगसमन्वितम् चचालकुर्वन्संभग्नंस्वभारेणफणीश्वरम् ६
जवेनजान्हवींतीर्त्वाकल्लोलजलशालिनीम् जगामविषयेस्वीयेस्वकीयजनशोभिते ७ पुष्कलेनयुतोराजा
स्वरथेनसमन्वितः रथेमणिमयेतिष्ठन्हस्तेकोदंडधारकः ८ हयंतंपुरतःकृत्वारत्नमालाविभूषितम् श्वेतातप
त्रंतस्यैवमूर्ध्निचामरभूषितम् ९ अनेकरथसाहस्रैःपरीतोबलिभिर्नृपैः उद्यत्कोदंडललितैर्वीरनादविभूषितैः १०
क्रमेणनगरींप्राप्यसूर्यवंशजभूषिताम् अनेकैःकेतुभिःश्रेष्ठैर्भूषितांदुर्गराजिताम् ११ रामःश्रुत्वाहयंप्राप्तंश
त्रुघ्नेनसहासुना पुष्कलेनचवीरेणययौहर्षमनेकधा १२ कटकंनिर्दिदेशासौचतुरंगंमहाबलः लक्ष्मणंप्रेषया
मासभ्रातरंबलिनांवरम् १३ लक्ष्मणःसैन्यसहितोगत्वाभ्रातरमागतम् परिरेभेमुदाक्रांतःक्षतशोभितगात्रकं
१४ सर्वत्रकुशलंपृष्टोवार्तांचात्रचकारसः परमंहर्षमापन्नःशत्रुघ्नःसंगतोमुदा १५ सौमित्रिःस्वरथेस्थित्वाभ्रा
त्रासहमहामतिः सैन्येनमहतावीरोययौस्वनगरंप्रति १६ सरयूःपुण्यसलिलापवित्रितजगत्त्रया रामपादर
जःपूताशरच्चंद्रसमप्रभा १७ हंसकारंडवाकीर्णाचक्रवाकोपशोभिता विचित्रतरवर्णैश्चपक्षिभिर्नादिताभृ
शम् १८ मंडपास्तत्रबहुशोरामचंद्रेणकारिताः ब्राह्मणानांवेदविदांपृथक्पाठनिनादकाः १९ क्षत्रियास्तत्रब
हवोधनुःपाणिसुशोभिताः ज्याटंकारेणबहुनानादयंतोमहीतलम् २० भुंजतेब्राह्मणायत्रविविधान्नैर्मनोहरैः

परस्परंप्रपश्यंतोवार्तांचक्रुर्मनोहराम् २१ पायसान्नानिशुभ्राणिचंद्रकांतिसमानिच क्षीराणिमधुयुक्तानि
शर्करामिश्रितानिच २२ अपूपास्तत्रबहुलाश्चंद्रबिंबसमाःश्रिया कर्पूरादिसुगंधेनवासिताःसुमनोहराः २३
फेनिकावटकाःस्निग्धाशतछिद्राविरंध्रकाः शष्कुल्योमंडकामृष्टामधुरान्नसमन्विताः २४ भक्तंकुमुदसंकाशं
मुद्गदालिविमिश्रितम् सुगंधेनसमायुक्तमत्यंतंप्रीतिदायकम् २५ ओदनोदधिनायुक्तोभीमपाकसमन्वितः
स्वादुपाककरैःसृष्टः पात्रेसुक्तःप्रवेषकैः २६ तत्रकेचिद्द्विजाःपात्रेनिक्षिप्तंवीक्ष्यपायसम् परस्परंतेप्रत्यूचुःकि
मिदंदृश्यतेऽद्भुतम् २७ किंचंद्रबिंबंनभसःपतितंतमसोभयात् अमृतंतुभवेत्येतन्मृत्युनाशकमद्भुतम् २८ तच्छ्रु
त्वारोषताम्राक्षःप्रोवाचान्योद्विजोत्तमः नभवत्येवचंद्रस्यबिंबत्वमृतविप्लुतम् २९ एकस्मिंदोर्वपुस्त्वेत दृश्य
तेसदृशंकथम् ब्राह्मणानांसहस्रस्यपात्रेपात्रेपृथक्पृथक् ३० ततोजानीहिकुमुदंकर्पूरंवाभविष्यति माजा
नीहिमृगांकस्यबिंबंशुभ्रश्रियान्वितम् ३१ तावदन्योरुषाक्रांतोधुन्वन्स्वंमस्तकंतथा नजानंतिद्विजामूढाः
स्वादुज्ञानविचक्षणाः ३२ इदंतुक्षीरकंदस्यरसेनपरिपाचितम् जानीहिशतपत्रोत्थपुष्पाणिमधुराणिच ३३
एवंपरस्परंविप्राःकंदमूलफलाशिनः तर्कयंतिमुनेप्रीतारसज्ञानेतिलोलुपाः ३४ तावदन्योद्विजःप्राहक्षत्रियाणां
वरंजनुः भोक्ष्यंतेतादृशंत्वन्नंमहत्पुण्यैरुपस्कृतम् ३५ तदातंचाब्रवीद्विप्रोदानस्यफलमीदृशम् येददंत्यग्रज-
न्मभ्यःप्राप्नुवंतितईप्सितम् ३६ यैरर्चितोनैवहरिर्नवेद्यैर्विविधैर्मुहुः तेषामेतादृशंभोज्यंनभवेदक्षिगोत्तरम्

३७ येनरैर्नाग्रजन्मानोभोजिताविविधैरसैः भुंजंतेतेस्वादुरसंकथंपापाःक्षुधार्दिताः ३८ एवंचातिरसैर्मिष्टै
र्भोजिताद्विजसत्तमाः मंडपेविपठंतस्तेशब्दब्रह्मविचक्षणाः ३९ नृत्यंत्येकेहसंत्येकेहृदंत्येकेप्रहर्षिताः उत्सव
श्वमहानासीछत्रुघ्नश्चागमत्तदा ४० रामःशत्रुघ्नमायातंपुष्कलेनसमन्वितम् निरीक्ष्यमुदमुद्भूतांरक्षितुंनाशक
त्तदा ४१ यावदुत्तिष्ठतेरामोभ्रातरंपरिरंभितुम् तावद्रामपदेलग्नःशत्रुघ्नोभ्रातृवत्सलः ४२ पादयोःपतितंवी
क्ष्यभ्रातरंविनयान्वितम् परिरेभेदृढंप्रीतःक्षतसंशोभितांगकम् ४३ अश्रूणिबहुधामुंचन्हर्षाच्छिरसिराघवः
सोत्यंतंमुदमापन्नःस्नेहप्रसरसंप्लुतः ४४ पुष्कलंस्वीयपदयोर्नम्रंविनयविह्वलम् सुदृढंभुजयोर्मध्येविनीयापी
ड्यमद्भुतम् ४५ हनूमंतंतथावीरंसुग्रीवंचांगदंतथा लक्ष्मीनिधिंजनकजंप्रतापाग्र्यंरिपुंजयम् ४६ सुबाहुंसु
मदंवीरंविमलंनीलरत्नकम् सत्यवंतंवीरमणिंसुरथंरामसेवकम् ४७ अन्यानपिमहाभागान्रघुनाथःस्वयंतदा
दा परिरेभेदृढंस्निग्धान्पादयोःप्रणतान्नृपान् सुमतिःश्रीरघुपतिंभक्तानुग्रहकारकम् परिरभ्यदृढंप्रीतःसं
मुखेवत्तिष्ठदुन्नतः ४९ तदारामोनिजामात्यंवीक्ष्यसान्निध्यमागतम् उवाचपरमप्रीत्यामंत्रिणंवदतांवरः ५० सु
मतेमंत्रिणाश्रेष्ठशंसमेवाग्मिनांवर कएतेभूमिपाःसर्वेकथमत्रसमागताः ५१ कुत्रकुत्रहयःप्राप्तःकेनकेननियंत्रि
तः कथंवैमोचितोभ्रात्रामहाबलसुशालिना ५२ शेषउवाच इत्युक्तोमंत्रिणांश्रेष्ठःसुमतिःप्राह
राघवम् प्रहसन्मेघगंभीरनादेनचसुबुद्धिमान् ५३ सुमतिरुवाच सर्वज्ञस्यपुरस्तेद्यमयाकथ

मुदीर्यते पृच्छसित्वंलोकरीत्यासर्वंजानासिसर्वदृक् ५४ तथापितवनिर्देशंशिरस्याधायसर्वदा ब्रवीमितत्
शृणुष्वाद्यसर्वराजशिरोमणे ५५ त्वत्प्रसादादहोस्वामिन्सर्वत्रजगतीतले परिबभ्रामतेवाहोभालपत्रसुशो-
भितः ५६ नकश्चित्तंनिजग्राहस्वमानबलदर्पितः स्वंस्वंराज्यंसमर्प्याथप्रणेमुस्तेपदांबुजम् ५७ कोवारावण
दैत्येंद्रनिहंतुर्वाजिसत्तमम् गृण्हातिविजयाकांक्षीजरामरणवर्जितः ५८ अहिछत्रांगतस्तावत्तववाजीमनो
रमः तद्राजासुमदःश्रुत्वाहयंप्राप्तंनवप्रभो ५९ सपुत्र सहितःसर्वसैन्येनबलिनावृतः सर्वंसमर्पयामासरा
ज्यंनिहितकंटकम् ६० योराजाजगतांनेत्रीं मातरंजगदंबिकाम् प्रसाद्यचिरमायुष्यंलेभेराज्यमकंटकम् ६१
सएषत्वांप्रणमतिसुमदःप्रभुसेवितम् तंगृहाणकृपादृष्ट्याचिराद्दर्शनकांक्षकम् ६२ ततःसुबाहुभूपस्यनग
रेबलपूरिते दमनस्तस्यवैपुत्रःप्रजग्राहहयोत्तमम् ६३ तेनसाकंमहद्युद्धंबभूवदमनेनच पुष्कलोजयमापेदे
संमूर्छ्यसुभुजात्मजम् ६४ ततःसुबाहुःसंक्रुद्धोरणेपवनजंबलात् युयुधेतवपादाब्जसेवकंबलिनांवरम् ६५
तस्यपादाहतोज्ञानंप्राप्यशापतिरस्कृतम् तुभ्यंसमर्प्यसकलंवाजिनःपालकोभवत् ६६ एषत्वांसुभुजोराजा
प्रणमत्युन्नतांगकः कृपादृष्ट्याभिसिंचत्वंसुबाहुंनयकोविदम् ६७ ततोमुक्तोहयोरेवाह्रदेसनिममज्जह त-
त्रप्राप्तंमोहनास्त्रं शत्रुघ्नेनबलीयसा ६८ ततोदेवपुरेप्रागात्शिववासविभूषिते तत्रत्यंतुविजानासियतस्त्वं
तत्रचागतः ६९ विद्युन्मालीहतोदैत्योसत्यवान्संगतस्ततः सुरथेनसमंयुद्धंजानासित्वंमहामते ७० ततः

ततःकुंडलकान्मुक्तोहयोबभ्रामसर्वतः नकश्चित्तंनिजग्राहस्ववीर्यबलदर्पितः ७१ वाल्मीकेराश्रमेरम्येहयःप्रा-
प्तोमनोरमः तत्रयत्कुतुकंजातंतच्छृणुष्वनरोत्तम ७२ तत्रार्भस्तवसारूप्यंबिभ्रत्षोडशवार्षिकः जग्राहवी
क्ष्यपत्रांकंवाजिनंबलवत्तमः ७३ तत्रकालजितायुद्धंमहज्जातंनरोत्तमः निहतस्तेनवीरेणशितधारेणहेति
ना ७४ अनेकेनिहताःसंख्येपुष्कलाद्यामहाबलाः मूर्छितंचापिशत्रुघ्नंचक्रेवीरशिरोमणिः ७५ तदाराजा
महद्दुःखंविचार्यत्वहृदिसंयुगे कोपेनमूर्छितंचक्रेवीरोहिबलिनांवरः ७६ सयावन्मूर्छितोराजातावदन्यःसमा
गतः तेनैतेनचसर्वंहिनाशितंकटकंतव ७७ सर्वेषांमूर्छितानांतुशस्त्राण्याभरणानिच गृहीत्वावानरोब
द्धोजग्मतुःस्वाश्रमंप्रति ७८ कृपांकृत्वापुनस्तेनदत्तोश्वोयज्ञियोमहान् जीवनंप्रापितंसर्वंकटकंनष्टजीवि
तम् ७९ वयंगृहीत्वातंवाहंप्राप्तास्तवसमीपतः एतदेवमयाज्ञातंतदुक्तंतेपुरोवचः ८०    इतिश्रीपद्मपु
राणेपातालखंडेशेषवात्स्यायनसंवादेसुमतिनिवेदनंनामपंचषष्टितमोऽध्यायः ६५    शेषउवाच
कथितौवैसुमतिनावाल्मिकेराश्रमेशिशू पुत्रौसीतायाइतिज्ञात्वावाल्मिकिंप्रतिसंजगौ १    श्रीरामउ-
वाच    कौशिशूममसारूप्यधारकौबलिनांवरौ किमर्थंतिष्ठतस्तत्रधनुर्विद्याविशारदौ २ अमात्यकथितौ
श्रुत्वाविस्मयोममजायते यौशत्रुघ्नंहनूमंतंलीलयांगबबंधतुः ३ तस्माच्छंससुनेसर्वंबालयोश्चविचेष्टितम्
यथामेपरमाप्रीतिर्भवत्येवमभीप्सिता ४ इतितत्कथितंश्रुत्वाराजराजस्यधीमतः उवाचपरमंवाक्यंस्पष्टाक्षर

समन्वितम् ५ वाल्मीकउवाच तवांतर्यामिणोनृणामज्ञातंनहिकिंचन तथापिकथयाम्यत्रतवसंतो
षहेतवे ६ राजन्यौबालकौमह्यमाश्रमेबलिनांवरौ त्वत्सारूप्यधरौतौचबालौशूरवरौप्रभो ७ त्वयायदावने-
त्यक्ताजानकीवैनिरागसी अंतर्वत्नीवनेघोरेविलपंतीमुहुर्मुहुः ८ कुररीमिवदुःखार्त्तांवीक्ष्याहंतववल्लभाम्
जनकस्यसुतांपुण्यामाश्रमेत्वनयंतदा ९ तस्याःपर्णकुटीरम्यारचितामुनिपुत्रकैः तस्यामभूत्तांपुत्रौद्वौभास
यंतौदिशोदश १० तयोरकरवंनामकुशोलवइतिस्फुटम् वद्वृधातेनिशंतत्रशुक्लपक्षेयथाशशी ११ कालेनो
पनयाद्यानिकर्माणिकृतवानहम् वेदान्सांगानहंसर्वान्ग्राहयामासभूपते १२ सर्वाणिसरहस्यानिशृणुश्वसु-
खतोमम आयुर्वेदंधनुर्विद्यांसरहस्यांतथैवच १३ विद्यांजालंधरींचाथसंगीतकुशलौकृतौ गंगाकूलेगाय
मानौल्लताकुंजवनेषुच १४ चंचलौचलचित्तौतौसर्वविद्याविशारदौ तदाप्रभृतिसंतोषंप्राप्तश्चाहंरघूत्तम दत्वा
सर्वाणिचास्त्राणिमस्तकेनिहतःकरः १५ अतीवगानकुशलौदृष्ट्वालोकाविसिस्मिरे षड्जमध्यमगांधारस्व
रभेदविशारदौ १६ तथाविधौविलोक्याहंगापयामिमनोहरम् भविष्यज्ज्ञानयोगाच्चकृतंरामायणंशुभम्
१७ मृदंगपणवाद्यादियंत्रवीणाविशारदौ वनेवनेचगायंतौमृगपक्षिविमोहकौ १८ अद्भुतंगीतमाधुर्यंतदारा
मकुमारयोः श्रोतुंतौवरुणोबालावानिनायविभावरीम् १९ मनोहरवयोरूपौगानविद्याब्धिपारगौ कुमारौजग्म
तुस्तत्रलोकेशादेशतःकिल २० परमंमधुरंरम्यंपवित्रंचरितंतव शुश्राववरुणःसार्धंकुटुंबेनचगायकैः २१

शृण्वन्नेवागंतस्तृप्तिंमित्रेणवरुणःसह सुधातोपिपरंस्वादुचरितंरघुनंदन २२ गानानंदमहालोभहृतप्राणेंद्रि
यक्रियः प्रत्यागंतुंदिदेशासौकुमारौनहितावको २३ अहंचापिगतःपश्चाद्वरुणालयमुत्तमम् वरुणःप्रेमस
हितःपूजांचक्रेममप्रभो २४ पृच्छनेजन्मकर्मादिसर्वज्ञायापिबालयोः वरुणायाब्रुवंसर्वंजन्मविद्याद्युपागमम्
२५ श्रुत्वासीतासुतौदेवःसच्चक्रेंबरभूषणैः देववन्महतींपूजांतयोर्मद्वाक्यगौरवात् २६ आहृतंराजपुत्राभ्यां
यद्दत्तंवरुणेनतत् प्रसन्नेनतयोर्वाद्यगानविद्यावयोगुणैः ततोमामब्रवीत्सीतामुद्दिश्यवरुणःकृती २७ सी
तापतिव्रताधुर्यारूपशीलवयोन्विता वीरपुत्रामहाभागात्यागंनार्हतिकर्हिचित् २८ महतीहानिरेतस्या-
स्त्यागेहिरघुनंदन सिद्धीनांपरमासिद्धिरेषातेह्यनपायिनी २९ पामरैर्महिमानास्याज्ञायतेयदिदूषिकैः काहा
निस्तावतारामपुण्यश्रवणकीर्तन ३० अस्मत्साक्षिकमेतस्याःपावनंचरितंसदा सद्यस्तेसिद्धिमायांतिये
सीतापदचिंतकाः ३१ यस्याःसंकल्पमात्रेणजन्मस्थितिलयादिकाः भवंतिजगतांनित्यंतथालोकेश्वराअमी
३२ सीतामृत्युःसुधाचेयंतपत्येषाचवर्षति स्वर्गमोक्षस्तपोयोगोदानंचतवजानकी ३३ ब्रह्माणंशिवमन्यांश्च
लोकपालान्मदादिकान् करोत्येषाकरोत्येवनान्यासीतातवप्रिया ३४ त्वंपितासर्वलोकानांसीताचजननीत्य
तःकुदृष्टिरस्यांकर्तुंवैभवान्योग्योनकर्हिचित् ३५ वेत्तिसीतांसदाशुद्धांसर्वज्ञोभगवान्स्वयम् भवानपिस्त
तांभूमेःप्राणादपिगरीयसीम् ३६ आहृतव्यात्वयातस्मात्प्रियाशुद्धेतिजानकी नचशापपराभूतिःसीतायांत्व

यिवाविभो ३७ इमानिममवाक्यानिवाच्यानिजगतांपतिम् रामंप्रतित्वयासाक्षाद्वाल्मीकेमुनिसत्तम ३८
इत्युक्तोवरुणेनाहंसीतासंग्रहकारणात् एवमेवहिसर्वैश्चकौतुकाविष्टमानसैः ३९ श्रुतंरामायणोद्गानंपुत्रा
भ्यांतेकृतासकृत् गंधर्वैरपिसर्वैश्चलोकपालैरपिप्रभो ४० प्रसन्नाएवसर्वेपिप्रशशंसुःकृतौचते त्रैलोक्यं-
मोहितंताभ्यांरूपगानवयोगुणैः ४१ दत्तंयल्लोकपालैस्तत्कृताभ्यांस्वीकृतंहितत् ऋषिभिश्चवराआभ्यामन्ये
भ्यःकीर्तिरेवच ४२ एकरामंजगत्सर्वंपूर्वंमुनिविलोकितम् त्रिरात्रमधुनाजातंकृताभ्यांसर्वमीक्षितम् ४३
एकरामपरामूर्तिर्लोकेपूर्वमवेक्षिता कामैश्चतुर्भिरद्यैयंजीयतेच्चयतस्ततः ४४सर्वत्रान्यत्रराजेंद्ररामपुत्रौकु
शीलवौ गीयतेअत्रसंकोचः किंकृतोविदुषित्वयि ४५ कृतेषुतवसर्वेषुश्रूयतेमहतीस्तुतिः त्यागादन्यत्रसी
तायाःपुण्यश्लोकशिरोमणे ४६ त्वयात्रैलोक्यनाथेनगार्हस्थ्यमनुकुर्वता अंगिकार्यौकृतौरामविद्याशीलगु
णान्वितौ ४७ नतौस्वांमातरंहित्वास्थास्यतोभवदंतिके जनन्यासहितौनस्मादाकार्यौभवताकृतौ दत्तएवत
येदानींसेना संजीवनात्पुनः ४८ प्रत्ययःसर्वलोकानांपावनःपापिनामपि नाज्ञानंतेनचास्माकंनामराणांच
मानद ४९ शंकास्तोनस्यास्त्कलोकानांयन्नष्टंतदिहध्रुवम् ५० शेषउवाच इतिवाल्मीकिनारामःसर्व
ज्ञोप्यवबोधितः स्तुत्वानत्वाचवाल्मीकिंप्रत्युवाचसलक्ष्मणम् ५१ गच्छताताधुनासीतामानेतुंधर्मचारिणी
म् सपुत्रांरथमास्थायकृमित्रसहितःसखे ५२ श्रावयित्वाममेमानिमुनेश्चवचनान्यपि संबोध्यचपुरीमेतां

सीतांप्रत्यानयाशुताम् ५३ यास्यामिनवसंदेशात्सर्वेषांवःप्रियाद्विभो देव्यायास्यतिचेद्देवयात्रामेसफलानः
५४ सामात्येमय्यसूयांचपूर्वदोषवशात्सती अनागतायांतस्यांतुक्षमस्वागमनंमम ५५ इत्युक्त्वालक्ष्मणो
रामंरथेस्थित्वानृपाज्ञया शुमित्रमुनिशिष्याभ्यांयुतोगाद्भूमिजाश्रमम् ५६ कथंप्रसादनीयास्यात्सी-
ताभगवतीमया पूर्वदोषंविजानंतीरामाधीनस्यमेसदा ५७ एवंसंचिंतयन्नंतर्हर्षसंकोचमध्यगः लक्ष्म
णःप्राप्यसीतायाआश्रमंश्रमनाशनम् ५८ रथात्सोथावरुह्यारादश्रुरुद्धविलोचनः आर्येपूज्येभगवतिशुद्धे
इतिवदन्मुहुः ५९ पपातपादयोस्तस्यावेपमानाखिलांगकः उत्थापितस्तयादेव्याप्रीतिविह्वलयासच ६०
किमर्थमागतःसौम्यवनंमुनिजनप्रियम् अस्तेसकुशलीदेवःकौसल्याशुक्तिमुक्तिकः ६१ असेषोमयिकश्चि
त्सर्कीर्त्याकेवलयाहृतः कीर्त्यतेसर्वलोकेश्चकल्याणगुणसागरः ६२ अकीर्तिभीतिमापन्नोत्यक्तुंमांत्वांनियुक्त
वान् यदातनश्चलोकेषुकीर्तिस्तस्यामलाभवेत् ६३ मृतापिपतिसत्कीर्तिंकुर्वत्यामेहिसाशुस्थिराम् पतिसामी-
प्यमेवाशुभूयादेवहिदेवर ६४ त्यक्तयापिमयातेननासौत्यक्तोमनागपि फलंहिसाधनायत्तंहेतुःफलवशोनतु ६५
कौशल्याशल्यशून्यासौकृपापूर्णासदामयि आस्तेकुशलिनीयस्याःपुत्रस्त्रैलोक्यपालकः ६६ सर्वेकुशलिनःसं
तिभरताद्याश्चबांधवाः शुमित्राचमहाभागा यस्याःप्राणादहंप्रिया ६७ मद्भर्तुःकिंत्वंवनेत्यक्तःसर्वलोकेषुकीर्त
ये राज्ञःकिंदुस्त्यजंतस्यस्वात्मापियस्यनप्रियः ६८ इत्येवंबहुधापृष्टस्तयारामानुजःसताम् उवाचकुशली

देवः कुशलंत्वयिपृच्छति ६९ कौसल्याचसुमित्राचयाश्चान्याराजयोषितः पप्रच्छुःकुशलंदेवीप्रीत्यात्वामाशिषास
ह ७० कुशलप्रश्नपूर्वंहितवपादाभिवंदनम् निवेदयामिशत्रुघ्नभरताभ्यांकृतंशुभे ७१ गुरुभिर्गुरुपत्नीभिःस
र्वाभिरपितेशुभे दत्ताशीःकुशलप्रश्नःकृतश्चत्वयिजानकी ७२ आकारयतिदेवस्त्वांनिर्व्यलीकेनचात्मवान्
अलब्धात्मरतिस्त्वत्तोन्यत्रसर्वत्रभामिनि ७३ शून्याएवदिशःसर्वास्त्वांविनाजनकात्मजे पश्यन्रोदतिनाथो
नोरोदयन्नितरानपि ७४ यत्रदेविस्थितासित्वंनित्यंस्मरतिराघवः अशून्यंतुतमेवासौमन्यमानोविदेहजे ७५
मन्येयमाश्रमोजातोवाल्मीकेर्यत्रजानकी कालंक्षणतिवार्ताभिर्मदीयाभिर्वदन्निति ७६ उक्तवान्यद्वदन्किं
चित्स्वामीनस्त्वयितत्शृणु व्यक्तीभवतिवक्तुर्यद्धृद्गतंतदसंशयम् ७७ लोकोवदतिमामेवसर्वेषामीश्वरेश्व
रम् अहंत्वदृष्टमेवैषांस्वतंत्रंकारणंध्रुवम् ७८ अदृष्टमेवकार्येषुसर्वेशोप्यनुगच्छति ईशनीयाःकुतोनैतदन्वी
युःसुखदुःखयोः ७९ धनुर्भंगेमतिभ्रंशेकैकेय्यामरणेपितुः अरण्यगमनेतत्रहरणेतववारिधेः ८० तरणेरक्ष
सांभर्तुर्मरणेपिरणेरणे सहायीभवनेमह्यमृक्षवानरराक्षसाः ८१ लाभेतवप्रतिज्ञायाःसत्यत्वेचपतिव्रते
पुनःस्वबंधुसंबंधेराज्यप्राप्तौचभामिनि पुनःप्रियावियोगेचकारणंयददवारणम् ८२ प्रसीदतितदेवाद्यसंयो
गेपुनरावयोः वेदोन्यथाकृतोयेनलोकोत्पत्तिलयौयतः ८३ लोकामानुगतास्तस्मात्कारणंप्रथमंत्वहम् ८४ अ
दृष्टमनुवर्ततेलोकाःसप्रतिबोधकाः भोगेनजीर्यतेदृष्टंतत्तुभक्तंत्वयावने ८५ स्नेहशृद्धिरियंभद्रेकृतामेत्वयिना

न्यथा मंतव्यं रक्षितोप्येष लोकः शिष्टानुवर्तिना ८८ आवयोर्निंद्याद्देवि सर्वावस्थासु शुद्धयोः लोकोनश्येद्विसंभ्र
दश्चरितैर्महतामयम् ८९ आवयोरुज्वलाकीर्तिरावयोरुज्वलोरसः आवयोरुज्वलोवंशावावयोरुज्वलाक्रिया -
९० भवेयुरावयोःकीर्तिगायकाउज्वलाभुवि आवयोर्भक्तिमंतोयेतेयांत्यंतंभवांबुधेः ९१ इत्युक्ताभवतीतेनप्रीय
माणेनतेगुणैः पत्युःपदांबुजेदृष्टुंकरोतुसदयंमनः ९२ वासांसिरमणीयानिभूषणानिमहांतिच अंगरागस्तथा
गंधामनोज्ञास्त्वयियोजिताः ९३ रथोदास्यश्वरामेणप्रेषिताउत्सवायते छत्रंचचामरेशुभ्रेगजाअश्वाश्वशोभ
ने ९४ स्तूयमानाद्विजश्रेष्ठैः सूतमागधबंदिभिः वंद्यमानापुरस्त्रीभिःसेव्यमानाचयोद्धृभिः ९५पुष्पैःसंछा
द्यमानाचदेविदेवांगनादिभिः धनादिददतीतेभ्योद्विजादिभ्योयथेप्सितम् ९६ गजारूढौकुमारौचपुरस्कृत्य
जनेश्वरि मयानुगम्यमानाचगच्छायोध्यांनिजांपुरीम् ९७ त्वयितत्रगतायांतुसंगतायांप्रियेणते सर्वासांराजना
रीणामागतानांचसर्वशः ९८ सर्वासामृषिपत्नीनांकौसल्यानांतथैवच मंगलैर्वाद्यगीताद्यैर्भवत्वद्यमहोत्सवः
९९ शेषउवाच इतिविज्ञापनांदेवीश्रुत्वासीतातमाहसा नाहंकीर्तिकरीराज्ञोह्यपकीर्तिःस्वयंत्वह
म् १०० किंमयातस्यसाध्यंस्याद्धर्मकामार्थशून्यया सत्येवंभवतांभूपेकोविश्वासोनिरंकुशे १प्रत्यक्षावापरोक्षा
वाभर्तुर्दोषामनस्थिताः नवाच्याजातुमादृश्याकल्याणकुलजानया २पाणिग्रहणकालेमेयद्रूपोत्हृदयेस्थितः
तद्रूपोत्हृदयान्नासौ कदाचिदपसर्पति ३ लक्ष्मणेमौकुमारौमेनन्तेजोंशसमुद्भवौ वंशांकुरौमहाशूरौधनुर्विद्या

विशारदो ४ नीत्वापितुःसमीपंतुलालनीयोप्रयत्नतः तपसाराधयिष्यामिरामंकाममिहस्थिता ५वाच्यंत्वयाम
हाभागपूज्यपादाभिवंदनम् सर्वेभ्यःकुशलंचापिगत्वेतोमदुपेक्षया ६ पुत्रौसमादिशत्सीतागच्छतंपितुरंतिक
म् शुश्रूषणीयएवासौभवद्भ्यांस्वपदप्रदः ७ आज्ञप्तावप्यनिच्छंतौतौकुमारौकुशीलवौ वाल्मीकिवचनात्तत्रज
ग्मतुश्चसलक्ष्मणौ ८ वाल्मीकेरेवपादाब्जसमीपंनत्वातौगतौ लक्ष्मणोपिनवंदेतंगत्वाबालकसंयुतः ९ वाल्मी-
किर्लक्ष्मणस्तौतुकुमारौमिलिताअमी सभायांसंस्थितंरामंज्ञात्वातेजग्मुरुत्सुकाः १० लक्ष्मणःप्रणिपत्याथसी
तावाक्यादिसर्वशः कथयामासरामायहर्षशोकयुतःसुधीः ११ सीतासंदेशवाक्येभ्योरामोमूर्छांसमन्वभूत्
संज्ञामवाप्यचोवाचलक्ष्मणंनयकोविदम् १२ गच्छमित्रपुनस्तत्रयत्नेनमहताच्चताम् शीघ्रमानयभद्रंतेमद्वाक्या
निनिवेद्यच १३ अरण्येकिंतपस्यंत्यागतिरन्याविचिंतिता श्रुत्वाद्दृष्टाथवामत्तोयन्नागच्छसिजानकी १४ त्वदि
च्छयात्वमेवेतोगतारण्यंमुनिप्रियम् पूजितामुनिपत्न्यस्ताद्दृष्टामुनिगणास्त्वया १५ पूर्णोमनोरथस्तेद्यकिन्ना
गच्छसिभामिनि नदोषोमयिपश्येस्त्वंस्वात्मच्छायाविलोकनात् १६ गत्वागत्वाथवामोरुपतिरेवगतिःस्त्रियः
निर्गुणोपिगुणांभोधिःकिंपुनर्मनसेप्सितः १७ यायाक्रियाकुलस्त्रीणांसासापत्युःप्रतुष्टये पूर्वमेवप्रतुष्टोहमि
दानींस्रुतरांत्वयि १८ यागोजपस्तपोदानंव्रतंतीर्थंदयादिकम् देवाश्वमयिसंतुष्टेतुष्टमेनंदसंशयम् १९
शेषउवाच इतिसंदेशमाश्राव्यंसीतांप्रतिजगत्पतेः आहलक्ष्मणआत्मेशमाननःप्रणयोद्गतः २० सी

तानयनमुद्दिश्यप्रसन्नस्त्वंयदूचिवान् कथयिष्यामितद्वाक्यंविनयेनसमन्वितम् २१ इत्युक्त्वापादयोर्नत्वारघु
नाथस्यलक्ष्मणः जगामत्वरितःसीतांरथेतिष्ठन्महाजवे वाल्मीकिःश्रीयुतौवीक्ष्यराजपुत्रौमहौजसौ उवाच
स्मितमाधायमुखंकृत्वामनोहरम् २३ युवांप्रागायतांपुत्रौरामचारित्रमद्भुतम् वीणांप्रवादयंतौचक-
लगानेनशोभितम् २४ इत्युक्तौतौसुतौरामचारित्रंबहुपुण्यदम् अगायतांमहाभागौसुवाक्यपदचित्रित
२५ यस्मिन्धर्मविधिःसाक्षान्पानिव्रत्यंतुयतस्थितम् भ्रातृस्नेहोमहान्यत्रगुरुभक्तिस्तथैवच २६ स्वामिनः
सेवनेयत्रनीतिर्मूर्तिमतिःकिल अधर्मकरशास्तावैयत्रसाक्षाद्रघूद्वहः २७ तद्गानेनजगद्व्याप्तंदिविदेवाअपि
स्थिताः किन्नराअपियद्गानंश्रुत्वामूर्छामिताःक्षणात् २८ वीणायारणितंश्रुत्वातालमानेनशोभितं नि-
खिलापरिषत्तत्रशालभंजीवचित्रिता २९ हर्षादश्रूणिमुंचंतोरामाद्याभूमिपास्तथा तद्गानंपंचमोवेदोविहि
तश्चित्रितैःपदैः ३० तत्रदृष्ट्वासुतौरामोमहागानविमोहकौ अदात्ताभ्यांसुवर्णस्यलक्षंलक्षंपृथक्पृथक् ३१
तदादानपरंदृष्ट्वावाल्मीकिंमुनिसत्तमम् अब्रूतांप्रहसंतौतौकिंचिद्रक्तभ्रुवौततः ३२ मुनेमहान्नक्रियतेअन्या
योभूमिपेनवै यदावाभ्यांसुवर्णानिदातुमिच्छंतिलोभयन् ३३ प्रतिग्रहोब्राह्मणानांशस्यतेभूमिपेनवै प्र-
तिग्रहपरोराजानरकायैवकल्पते ३४ आवयोःकृपयायुक्तंराज्यंभुंक्तेमहीपतिः कथंदातुंसुवर्णानिवांछति
श्रेयसांचितः ३५ इत्युक्तवंतौतौदृष्ट्वावाल्मीकिःकृपयायुतः अशंसस्मितरंयुष्मज्ज्ञानीतंनीतिवित्तमो ३६

इतिश्रुत्वामुनेर्वाक्यंबालकौनृपपादयोः लग्नौविनयसंयुक्तौमातृभक्त्यातिनिर्मलौ ३८ रामोवालौदृदेस्वांगेप
रिरभ्यमुदान्वितः मेनेस्वीयौतदाधर्मौमूर्तिमंताबुपस्थितौ ३९ सभापिरामःकृतयोर्वीक्ष्यवक्त्रेमनोरमे जान
कीपतिभक्तित्वंसत्यंमेनेमुनीश्वर ४० इतिशेषमुखप्रोक्तंश्रुत्वावात्स्यायनोब्रवीत् रामायणंश्रोतुमनाःसर्वधर्म
समन्वितं ४१ वात्स्यायनउवाच कस्मिन्कालेकृतंस्वामिन्रामायणमिदंमहत् कस्मात्चका
रकिंतत्रवर्णनंतद्वदस्वमे ४२ शेषउवाच एकदागतवान्विप्रोवाल्मीकिर्विपिनंमहत् यत्रताला
स्तमालाश्चकिंशुकायत्रपुष्पिताः ४३ केतकीपत्ररजसिरवंकुर्वंतिषैरवम् शशिप्रभेवमहतीदृश्यतेकृष्णवर्ण
भृत् चंपकोबकुलश्चापिकोविदारःकुरंवरः ४४ अनेकेपुष्पितायत्रपादपाःशोभनेवने कोकिलानांचशब्देन
निर्झराणांचशब्दितैः ४५ संघुष्टंसर्वतोरम्यंमनोहरवयोन्वितम् तत्रक्रौंचयुगंरम्यंकामबाणप्रपीडितम् ४६
परस्परंप्रहर्षितंरमेस्निग्धतयास्थितम् तदाव्याधःसमागत्यतयोरेकंमनोहरम् ४७ अवधीन्निर्दयःकश्चि
न्मांसास्वादनलोलुपः तदाक्रौंचीव्याधहतंस्वपतिंवीक्ष्यदुःखिता ४८ विललापभृशंदुःखान्मुंचंतीरावमु
च्चकैः तदामुनिःप्रकुपितोनिषादंक्रौंचघातकम् ४९ शशापचाप्युपस्पृश्यसरितःपावनंजलं मानिषादप्रति
ष्ठात्वमगमःशाश्वतीःसमाः ५० यत्क्रौंचपक्षिणोरेकमवधीःकाममोहितम् तदाप्रबंधंश्लोकस्यजातंमत्वाअ
नुद्विजाः ५१ उचुर्मुनिंप्रहृष्टास्तेशंसंतःसाधुसाध्विति स्वामिन्शापोदितेवाक्येभारतीश्लोकमाननोत् ५२

अत्यंतंमोहनोजातः श्लोकोयंमुनिसत्तम तदामुनिःप्रहृष्टात्माबभूववाडवर्षभ तस्मिन्कालेसमागत्यस्रष्टा
पुत्रैःसमन्वितः ५३ वचोजगादवाल्मीकिंधन्योसित्वंमुनीश्वर भारतीत्वन्मुखेस्थित्वाश्लोकत्वंसमपद्यत
५४ तस्माद्रामायणंपुण्यंकुरुष्वमधुराक्षरम् येनतेविमलाकीर्तिराकल्पांतंभविष्यति ५५ धन्यासैवमुखे
वाणीरामनाम्नासमन्विता अन्याकामकथानृणांजनयत्येवपातकम् ५६ तस्मात्वंकुरुष्वरामस्यचरित्रंलो
कविश्रुतम् येनस्यात्तापिनांपापहानिरेवपदेपदे ५७ इत्युक्त्वांतर्दधेस्रष्टासर्वदेवैःसमन्वितः ततःसंचिंत
यामासकथंरामायणंभवेत् ५८ तदाध्यानपरोजातोनदीतीरेमनोरमे तस्यचेतस्यथोरामःप्रादुर्भूतोमनोह
रः ५९ नीलोत्पलदलश्यामंलक्ष्मीवासंमनोरमम् निरीक्ष्यतस्यचरितंभूतंभव्यंभवच्चयत् ६० तदात्यंतंमु
दंप्राप्तोरामायणमसीसृजत् मनोरमपदैर्युक्तमर्थैर्बहुविधैरपि ६१ षट्कांडानिसुरम्याणियत्ररामायणे
नघ बालमारण्यकंचान्यत्किष्किंधास्कंदरंतथा ६२ युद्धमुत्तरमन्यत्त्वषडेतानिमहामते शृणुयाद्योनरःपुण्या
न्सर्वपापैःप्रमुच्यते ६३ तत्रबालेमुनिकृतपुत्रेष्ट्याच्चतुरःसुतान् प्रापपंक्तिरथःसाक्षाद्धरिंब्रह्मसनातनम्
६४ सकौशिकमखंगत्वासीतामूढ्वाथभार्गवम् आगत्यपुरमुत्कृष्टंयौवराज्यप्रगल्भकः ६५ मातृवाक्याद्वनं
प्रागात्गंगामुत्तीर्यपर्वतम् चित्रकूटंमहिलयालक्ष्मणेनसमन्वितः ६६ भरतस्तद्वनेश्रुत्वाजगामभ्रातरं
नयी तमप्राप्यस्वयंनंदीग्रामेवासमचीकरत् ६७ बालमेतच्छृणुष्वान्यदारण्यकमथाखिलम् मुनीनामा

श्रमेवासस्तत्रतत्रोपवर्णनम् ६८ नासाछेदःशूर्पणख्याखरदूषणनाशनम् मायामारीचहननंसीताहरण
मेवच ६९ वनेविरहिणाभ्रांतंमनुष्यचरितंभृतं कबंधप्रेक्षणंतत्रपापायांगमनंतथा ७० हनूमतासंगमोभू
दित्येतद्वनसंज्ञितम् अपरंचशृणुवात्स्यायनसंक्षेपात्कथयाम्यहम् ७१ सप्ततालप्रभेदश्चवालेर्मारणमद्भुतम्
सुग्रीवेराज्यदानंचनगवर्णनमित्युत ७२ लक्ष्मणात्कर्मसंदेशःसुग्रीवस्यविवासनम् तथासैन्यसमुद्देशः
सीतान्वेषणमित्युत ७३ संपातिप्रेक्षणंतत्रवारिधेर्लंघनंतथा परतीरेकपिप्राप्तिःकिष्किंधाकांडमुत्तमं ७४
सुंदरंशृणुकांडंवैयत्ररामकथाद्भुता प्रतिगेहेपरिभ्रांतिःकपेश्चित्रस्यदर्शनम् ७५ सीतासंदर्शनंतत्रजानक्या
भाषणंतथा वनभंगःप्रकुपिताद्बंधनंवानरस्यच ७६ ततोलंकाप्रज्वलनंजानक्यासंगतिस्ततः रामाभि
ज्ञानदानंचसैन्यप्रस्थानमेवच समुद्रेसेतुकरणंशुकसारणसंगतिः इतिसुंदरमाख्यातंयुद्धेसीतासमागमः
७८ उत्तरेष्वृषिसंवादोयज्ञप्रारंभएवच तत्रानेकारामकथाःश्रण्वतांपापनाशकाः इतिषट्कांडमाख्यातं
ब्रह्महत्योपनाशनम् ७९ संक्षेपतोमयातुभ्यमाख्यातंसुमनोहरम् चतुर्विंशतिसाहस्रंषट्कांडंपरिकल्पि
तम् ८० तद्दैरामायणंप्रोक्तंमहापातकनाशनम् तच्छ्रुत्वाराघवःप्रीतःपुत्रावाधायचासने दृढंतोपरिर
भ्याथसीतांसंस्मारवल्लभाम् ८१ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधे
षट्षष्टितमोऽध्यायः ६६ शेषउवाच अथसोमित्रिरागत्यजानकींनतवान्मुहुः प्रेमगद्गद

याशंसन्रामचंद्रप्रणोदितम् १ सीतायमागतंदृष्ट्वालक्ष्मणंविनयान्वितम् तन्मुखाद्रामसंदेशंश्रुत्वोवाचविलज्जि
ता २ सौमित्रेकथमागच्छेरामत्यक्तामहावने तिष्ठामिसंस्मरन्रामंवाल्मिकेराश्रमेन्वहम् ३ तस्यामुखोदितंवाक्यंश्रु
त्वासौमित्रिरब्रवीत् मातःपतिव्रतेरामस्त्वामाकारयतेमुहुः ४ पतिव्रतापतेश्चैवदोषंनानयतेयदि तस्मादागच्छ-
हिमयास्थित्वास्यंदनउत्तमे ५ इत्यादिवचनंश्रुत्वाजानकीपतिदेवता मनोरोषंपरित्यज्यतस्थौसौमित्रिणारथे
तापसीःसकलानत्वामुनींश्चनिगमोज्वलान् ६ रामंस्मरंतीमनसारथेस्थित्वागमत्पुरम् क्रमेणनगरींप्राप्तामहा
र्हाभरणान्विता ७ रामस्यपादयोर्लग्नापतिव्रतपरायणा रामस्तामागतांदृष्ट्वाजानकींप्रेमविह्वलाम् ८ साध्वित्व
यासहेदानींकुर्वेयज्ञसमापनम् वाल्मिकिंसानमस्कृत्यतथान्यान्विप्रसत्तमान् ९ जगाममातृपदयोःसन्नतिं
कर्तुमुत्सुका १० कौसल्यातांमथायातांवीरसूंजानकींप्रियाम् आशीर्भिरभिसंयुज्यययौहर्षमनेकधा ११ कै-
कयीपदयोर्नम्रांवीक्ष्यवैदेहिपुत्रिकाम् भर्त्रासहचिरंजीवसपुत्रेत्याशिषंव्यधात् १२ सुमित्रास्वपदेनम्रांवी
क्ष्यवैदेहिपुत्रिकाम् आशिषंव्यदधात्तस्याःपुत्रपौत्रप्रदायिनीम् १३ सीताताःसर्वतोनत्वारामचंद्रप्रियासती
परमंहर्षमापन्नाबभूवकिलवाडव १४ समागतांवीक्ष्यपत्नींरामचंद्रस्यकुंभजः सुवर्णपत्नींधिःकृत्वातामधा
द्धर्मचारिणीम् १५ रामस्तदायज्ञमध्येशुभेसीतयासह नारयानुगतोयद्वच्छशीवशरदागमे १६ प्रयोगम
करोत्तत्रकालेप्राप्तेमनोरमे॰ वैदेह्याधर्मचारिण्यासर्वपापापनोदनम् १७ सीतयासहितोरामंप्रयुक्तंयज्ञकर्म

णि निरीक्ष्यजहृषुस्तत्रकौतुकेनसमन्विताः १८ वसिष्ठंप्राहस्रमतिंरामस्तत्रक्रतौवरे किंकर्तव्यंमयास्वा
मिन्नतःपरंक्रतूत्तमे १९ रामस्यवचनंश्रुत्वागुरुःप्राहमहामतिः ब्राह्मणानांप्रकर्तव्यापूजासंतोषकारका
२० मरुत्तेनक्रतुःपूर्वंकृतःसंभारसंभृतः ब्राह्मणास्तत्रवित्ताद्यैस्तोषिताअभवंस्तदा २१ अत्यंतंवित्तसं
भारंनेतुंविप्राशकन्नहि प्राक्षिपन्हिमरुद्देशेवितभारहराद्विजाः २२ तस्मात्त्वमपिराजाग्र्योलक्ष्मीवान्नृप
सत्तम देहिदानानिविप्रेभ्योयथास्यात्प्रीतिरुत्तमा २३ तच्छ्रुत्वाराजराजाग्र्यःपूज्यंमत्वाघटोद्भवम् प्रथमंपू
जयामासब्रह्मपुत्रंतपोधनम् २४ अनेकरत्नसंभारैःस्वर्णभारैरनेकधा देशैर्जनैःपरिवृतैरत्यंतंप्रीतिदायकैः
२५ अगस्त्यंपूजयामाससपत्नीकंमनोरमम् तथैवरत्नैःस्वर्णैश्चदेशैश्चविविधैरपि २६ व्यासंसत्यवतीपुत्रं
तंचैवसमपूजयत् च्यवनंभार्ययासार्धंस्रुरत्नैःसमपूजयत् २७ अन्यानपिमुनीन्सर्वान्ऋत्विजांश्चतपो
निधीन् पूजयामासरत्नौघैःस्वर्णभारैरनेकधा २८ अदात्तदाक्रतौरामोविप्रेभ्योबहुदक्षिणाम् लक्षंलक्षंसु
वर्णस्यप्रत्येकंत्वग्रजन्मने २९ दीनांधकृपणेभ्यश्चददौदानमनेकधा यथासंतोषविहितैर्वित्तैरत्नैर्मनोहरैः ३०
वासांसिचविचित्राणिभोजनानिमृदूनिच तत्रप्रादाद्यथास्वांतंसर्वेषांप्रीतिदायकम् ३१ हृष्टपुष्टजनाकीर्णं
सर्वसत्वोपबृंहितम् अत्यंतमभवत्हृष्टंपुरंपुंस्त्रीसमाकुलम् ३२ दानंददंतंसर्वेषांवीक्ष्यकुंभोद्भवोमुनिः अ
त्यंतंपरमांप्रीतिंययौक्रतुवरेद्विजः ३३ नदाभिषेकस्नानार्थंपानीयममृतोपमम् आनेतुंचचतुःषष्टिनृपान्

सस्त्रीन्समादिशत् ३४ रामस्तु सीतयासार्धमानेतुमुदकंययौ घटेनस्वर्णवर्णेनसर्वालंकारशोभया ३५ सौ
मित्रिरप्युर्मिलयामांडव्याभरतोनृपः शत्रुघ्नःश्रुतकीर्त्याचकामवत्याच्चपुष्कलः ३६ सुबाहुःसत्यवत्याच्चसत्य
वान्वीरशोभया सुमदस्तत्रकीर्त्याचराज्ञाचविमलोनृपः ३७ राजावीरमणिस्तत्रश्रुतवत्यामनोज्ञया लक्ष्मी
निधिःकोमलयारिपुतापोंगसेवया ३८ बिभीषणोमहामूर्त्याप्रतापाग्र्यःप्रतीतया उग्राश्वःकामगमयानील
रत्नोधिगम्यया ३९ सुरथःसुमनोहार्यातथाच्चरुमयाकपिः इत्यादीन्नृपतीन्विप्रोवसिष्ठःप्राहिणोन्मुनिः ४०
वसिष्ठःशरयूंगत्वाशिवपूतजलाप्लुतम् उदकंमंत्रयामासमंत्रेणमंत्रवित्तमः ४१ यज्ञार्थंरामचंद्रस्यसर्वलो
कैकरक्षितुः ४२ उदकंतन्मुनिस्पृष्टंसर्वेरामादयोनृपाः आजन्हुर्मंडपनलेविप्रवर्यैरुपस्कृते ४३ पयोभिर्नि
र्मलैःस्नाप्यवाजिनंक्षीरसंनिभम् मंत्रेणामंत्रयामासरामहस्तेनकुंभजः ४४ पुनीहिमांमहाबाहअस्मिन्ब्र
ह्मसमाकुले तन्मध्येनिखिलादेवाःप्रीणंतुपरितोषिताः ४५ इत्युक्त्वासनृपोरामःसीतयासममस्पृशत् तदा
सर्वेद्विजाश्चित्रममन्यंतकुतूहलात् ४६ परस्परमवोचंस्तेयन्नामस्मरणान्नराः महापापात्प्रमुच्यंतेसरामः
किंवदत्यहो ४७ इत्युक्तवतिभूमीशेरामेकुंभोद्भवोमुनिः करवालंचाभिमंत्र्यददौरामकरेमुनिः ४८ करवाले
धृतेस्पष्टेरामेणासहयःकृतौ पशुत्वंतुविहायाशुदिव्यरूपमविंदत ४९ विमानवरमारुह्यअप्सरोभिःस
मंततः चामरैर्वीज्यमानश्चवैजयंत्याविभूषितः ५० तदातंवाजिनंत्यक्त्वादिव्यरूपधरंवरम् वीक्ष्यलोकःक

तौसर्वेविस्मयंप्राप्नुवंस्तदा ५१ तदारामःस्वयंजानन्ज्ञापयन्सर्वतोनरान्पप्रच्छदिव्यरूपंतंसूकरंपरमधार्मि
कं ५२ कस्त्वंदिव्यवपुःप्रासःकस्मात्त्वंवाजिलांगतः कथंसूकरस्त्रीसहितःकिंचिकीर्षसितद्वद ५३ रामस्यवचनं
श्रुत्वादेवःप्रोवाचभूमिपम् हसन्मेघरवांवाणीमवदत्सुमनोहराम् ५४ तवाज्ञातंनसर्वत्रबाह्याभ्यंतरचा
रिणः तथापिपृच्छतेतुभ्यंकथयामियथातथम् ५५ अहंपुराभवंरामद्विजःपरमधार्मिकः अन्वयंप्रति
कूलंवैवेदस्यरिपुतापन ५६ कदाचिद्धूतपापायास्तीरेहंगतवान्पुरा अनेकवृक्षललिते सर्वत्रसुमनोरमे
५७ तत्रस्नात्वापितॄन्तृप्त्वादानंदत्वायथाविधि ध्यानंतवमहाबाहोदान्वेदवादसमन्वितान् ५८ तदाजनाः
समायाताबहवस्तत्रभूपते तेषांप्ररोचनार्थायदंभकर्माचरंतदा ५९ अनेकक्रतुसंभारैःपूर्णमेजिरमुत्त
म् वासोभिश्छादितंरम्यंचषालादियुतंमहत् ६० अग्निहोत्रोद्भवोधूमःसर्वतोनभसोंगणम् चकाररम्यम
तुलंचित्रकारीवपुर्धरः ६१ अनेकतिलकैरेवशोभितांगोमहत्तपाः दर्भशोभःसमित्पाणिर्दंभोमूर्तिधरःकि
मु ६२ दुर्वासास्तत्रस्वच्छंदंपर्यटन्जगतीतलम् प्रापतत्रमहातेजाधूतपापःसरित्तटे ६३ ददर्शमांदंभकरं
मौनधारिणमग्रतः अनर्घ्यकरमुन्मत्तमस्वागतवचःकरम् ६४ दृष्ट्वातीवक्रुधाक्रांतःसमुद्रमिवपर्वणि श-
शापासौमुनिस्तीव्रंदंभिनंमांमहामतिः ६५ दंभंकरोषिचेत्तीरेसरितस्त्वंसुदुर्मते तर्हिप्राप्नुहिनिर्वाच्यंपशु
त्वंतापसाधम ६६ शापंप्रदत्तंसंश्रुत्यदुःखितोहंतदाभवम् अग्राहिषंपदेतस्यमुनेर्दुर्वाससःकिल ६७ त

दामेकृतवान्रामहद्विजोनुग्रहमुत्तमं तदहंतस्यचरणौस्पृशन्प्राप्तोमनोरमम् ६८ यद्भवंन्नामदेवादिदुर्लभंबहु
जन्मभिः तत्तेकरजसंतस्पर्शप्राप्तवानि हदुर्लभम् ६९ आज्ञापय महाराजत्वत्प्रसादादहंमहत् गच्छामिशाश्व
तंस्थानंतवदुःखादिवर्जितम् ७० नयत्रशोकोनजरानमृत्युःकालविभ्रमः तत्स्थानंदेवगच्छामित्वत्प्रसादा
न्नराधिप ७१ इत्युक्त्वातंपरिक्रम्यविमानवरमारुहत् अनेकरत्नखचितंसर्वदेवाधिवंदितम् ७२ गतोसौ
शाश्वतस्थानंरामपादप्रसादतः पुनरावृत्तिरहितंशोकमोहविवर्जितम् ७३ तेनतत्कथितंश्रुत्वारामंज्ञा
त्वानरेजनाः विस्मयंप्रापिरेसर्वेपरस्परमुदीक्षया ७४ शृणुद्विजमहाबुद्धेदंभेनापिस्मृतोहरिः ददातिमोक्षं
कृतनरांकिंपुनर्दंभवर्जनात् ७५ यथाकथंचिद्रामस्यकर्तव्यंस्मरणंपरम् येनप्राप्नोतिपरमंपदंदेवादिदुर्लभ
म् ७६ तच्चित्रंवीक्ष्यमुनयःकृतार्थमेनिरेनिजम् यद्रामचरणप्रेक्षापुरुषंकर्मयंत्रितम् ७७ गतेतस्मिन्सु
रेस्वर्गहयरूपधरेपुरा उवाचरामस्तपसांनिधीन्वेदविशारदान् ७८ किंकर्तव्यंमयाब्रह्मन्हयोनष्टोगतःस्व
र्गम् होमःकथंपुरोभाविसर्वदैवततर्पकः ७९ यथास्यात्क्रतुसंतृप्तिर्यथामेमखउत्तमः तथाकुर्वंतुमुनयो
यथामेस्याद्विधिश्चितम् ८० इतिवाक्यंसमाश्रुत्यजगादमुनिसत्तमः वशिष्ठःसर्वदेवानांचित्ताभिज्ञानको
विदः ८१ कर्पूरमाहरक्षिप्रंयेनदेवाःस्वयंपुरा प्राप्यहव्यंगृहिष्यंतिमद्वाक्यप्रेरितास्सुराः ८२ इतिवाक्यंसमा
कर्ण्यरामःक्षिप्रमुपाहरत् कर्पूरंबहुदेवानांप्रीत्यर्थंबहुशोभनम् ८३ तदामुनिःप्रहृष्टात्मादेवानाह्वयतद्रु

नम् तेसर्वेतत्क्षणाद्याप्ताः स्वपरीवारसंवृताः ८४ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवा-
देरामाश्वमेधेसप्तषष्टितमोऽध्यायः ६७ शेषउवाच इदंतत्रहविर्मृष्टंरामचंद्रेणवीक्षितम्
परिस्वादन्कृतोतृप्तिंनप्राप्तास्तरसंयुताः १ नारायणोमहादेवोब्रह्मातत्रचतुर्मुखः वरुणश्चकुबेरश्चतथा-
न्येलोकपालकाः २ तत्रास्वाद्यहविःस्निग्धंवसिष्ठेनपरिष्कृतम् ततःपुनर्हिविप्रेंद्रक्षुधार्ताइवभोजनात् ३ स
र्वान्देवांश्चसंतर्प्यहविषाकरुणानिधिः वसिष्ठःप्रेरितःसर्वमितिकर्तव्यमाचरत् ४ ब्राह्मणादानसंतुष्टाहवि
स्तुष्टाःसुरावराः नृपाःसर्वेस्वकंभागंगृहीत्वास्वालयंययुः ५ ऋषिभ्योहोतृमुख्येभ्योप्रादाद्राज्यंचतुर्दिश
म् संतुष्टास्तेद्विजाराममाशीर्भिरदद्गुःशुभम् ६ पूर्णाहुतिंततःकृत्वावसिष्ठःप्राहसुस्मितः वर्धावयंतुभूमी
शंयागपूर्तिकरंपरम् ७ तद्वाक्यंतास्त्रियःश्रुत्वालाजैरवकिरन्मुदा लावण्यजितकंदर्पमहामणिविभूषितं
८ ततोवभृथस्नानार्थंप्रेरयामासभूमिपम् ययौरामःसहस्त्रीयैःसरयूतीरमुत्तमम् ९ अनेकराजकोटी
भिःपरीतःपरिवारिभिः जगामससरिच्छ्रेष्ठांपक्षिवृंदसमाकुलाम् १० तारापतिरिवस्वाभिर्भार्याभिर्वृतउन्
प्रभः विरोचतेयथातद्वद्रामोराजगणैर्वृतः ११ तदुत्सवंसमाज्ञायययुर्लोकाःस्त्वरायुताः सीतापतिमुखालो
कनिश्चलीभूतलोचनाः १२ राजेंद्रंसीतयासाकंगच्छंतंसरितंप्रति विलोक्यमुदितालोकाश्चिरंदर्शनलालसाः
१३ अनेकनटगंधर्वागायंतोयशउज्वलम् अनुजग्मुर्मुनीशानंसर्वलोकनमस्कृतम् १४ नर्तक्यस्तत्रनृत्यंत्यःक्षो

भयंत्यः पतेर्मनः जलयंत्रैश्चसंचिंत्योययुश्रीरामसेवनम् १५ महाराजंविलोकंत्योहरिद्राकुंकुमंस्त्रियः परस्परं
प्रलिंपंत्योमुदंप्रापुर्महत्तराम् १६ कुचयुग्मेपरिन्यस्तमुक्ताहारसुशोभिताः श्रवणद्वंद्वसंमृष्टस्वर्णकुंडललक्षिताः
१७ अनेकनरनारीभिःसंकीर्णमार्गमाचरन् यथावत्सरितंप्रापशिवपुण्यजलाप्लुताम् १८ तत्रगत्वासवैदेह्याराम
मःकमललोचनः प्रविवेशजलंपुण्यंवसिष्ठादिभिरन्वितः १९ अनुप्रविविशुःसर्वेराजानोजनतास्तथा तत्पादर
जसापूतंजलंलोकैकवंदितम् १२० परस्परंप्रसिंचंतोजलंयंत्रैर्मनोरमैः सुशोणनयनाःसर्वेहर्षंप्रापुर्मनोधिकम्
२१ सरामःसीतयासार्धंचिरंपुण्यजलेप्लुवे क्रीडित्वाजलकल्लोलैर्निरगाद्धर्मसंयुतः २२ दुकूलवासाःसकिरीट
कुंडलःकेयूरशोभावरकंकणान्वितः कंदर्पकोटिश्रियमुद्वहन्नृपोराजाचसर्वैरुपसंस्तुतोबभौ २३ सयागवर्यंवर
वर्णशोभितंकृत्वासरित्तीरवरेमहामनाः त्रैलोक्यलोकश्रियमापमद्भुतामन्यैर्दुरापांनृपतिर्भुजैर्निजैः २४ एवं-
जनकसस्तुन्याहूयमेधत्रयंचरत् त्रैलोक्यैकीर्तिमतुलाप्रासादेवैःसुदुर्लभा २५ एतत्तेवर्णितंतातयत्पृष्टोरामस
त्कथाम् विस्तृतःकथितोमेद्यभूयःकिंपृच्छसेद्विज २६ यःशृणोतिहरेर्भक्त्यारामचंद्रस्यसन्मखं ब्रह्महत्यांक्ष
णात्तीर्त्वाब्रह्मशाश्वतमाप्नुयात् २७ अपुत्रोलभतेपुत्रान्निर्धनोधनमाप्नुयात् रोगात्मुच्येतरोगार्त्तोबंधोमुच्ये
तबंधनात् २८ यत्कथाश्रवणाद्दुष्टःसोपियातिपरांगतिम् प्राप्नोतिकिमुविप्राग्र्यरामभक्तिपरायणः २९ रामंस्मृ
त्वामहाभागपापिनोपरमंपदम् प्राप्नुयुःपरमंस्वर्गंशक्रदेवाधिदुर्लभम् ३० तेधन्यामानवालोकेयेस्मरंतिरघू

राः मेः
१३८

त्तमम् तेक्षणात्संसृतिंतीर्त्वागच्छंतिसुखमव्ययम् ३१ प्रत्येकमक्षरंब्रह्महत्यावंशदवानलः तंयःश्रावयतेधी
मान्तंगुरुंप्रतिपूजयेत् ३२ श्रुत्वाकथांवाचकायगवांद्वंद्वंप्रदापयेत् सपत्नीकायसंपूज्यवस्त्रालंकारभोजनैः
३३ कुंडलाभ्यांविराजंतंमुद्रिकाभिरलंकृतं रामसीतेस्वर्णमय्यौप्रतिमेशोभनेवरे ३४ कृत्वानुवाचकायेवदी
यतेभोद्विजोत्तम तस्यदेवाश्चपितरस्तुष्टायच्छंतिवांछितम् ३५ त्वयापृष्टारामकथामयातेकथितापुरा किम
न्यत्कथ्यतांब्रह्मन्पुरतस्तवधीमतः ३६ शृण्वंतियेकथामेतांब्रह्महत्यौघनाशिनीम् तेयांतिपरमंस्थानंयच्च
देवैःसुदुर्लभम् ३७ गोघ्नश्चापिकृतघ्नश्चसुरापोगुरुतल्पगः क्षणात्पूतोभवत्येवनात्रसंशयितुंक्षमम् १३८
॥ ॥ इतिश्रीपद्मपुराणेपातालखंडेशेषवात्स्यायनसंवादेरामाश्वमेधेश्रवणपठनपुण्यवर्णनंनामाष्टषष्टि
तमोऽध्यायः ६८ श्रीसीतारामचंद्रार्पणमस्तु शुभंभवतु रामाश्वमेधःसमाप्तः

शके१७७१ पिंगलनामसंवत्सरेज्येष्ठशुद्ध१रविवासरेइदंपुस्तकंसमाप्तम् ॥ मुंबईतबापूसदाशिवशेटहेगिष्टेश्री
वर्धनकरयाणींआपल्याछापखान्यांतछापिलें ठिकाणाहनुमान्गल्ली छ छ छ छ

अः
६८

१३८

